**अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते॥१३॥**

**अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मा-दिमाः प्रजाः प्रजायन्त इति॥१४॥**

निश्चय ही दिन-रात भी प्रजापति है, उनमें दिन ही प्राण है और रात्रि ही रयि है। जो लोग (मूर्खतावश) दिन में रति स्वरूपा स्त्री से संयुक्त होते हैं वे निश्चय ही प्राण की हानि करते है तथा जो ऋतु काल में रात्रि के समय रति से संयुक्त होते हैं वह उनका ब्रह्मचर्य ही है। (अतः प्रशस्त होने के कारण ऋतु काल में ही रात्रि के समय स्त्री गमन का प्रासंगिक विधान है)॥१३॥

अन्न ही प्रजापति है (उसी से प्रजा का कारण रूप) वह वीर्य होता है और उस वीर्य से ही यह (मनुष्यादि रूप सम्पूर्ण) प्रजा उत्पन्न होती है॥१४॥

---

च्छुक्लपक्षात्मानं प्राणं सर्वमेव पश्यन्ति तस्मात्प्राणदर्शिन एत ऋषयः कृष्णपक्षेऽपीष्टं यागं कुर्वन्तः शुक्लपक्ष एव कुर्वन्ति प्राणव्यतिरेकेण कृष्णपक्षस्तैर्न दृश्यते यस्मादितरे तु प्राणं न पश्यन्तीत्यदर्शनलक्षणं कृष्णात्मानमेव पश्यन्ति। इतरे इतरस्मिन्कृष्णपक्ष एव कुर्वन्ति शुक्ले कुर्वन्तोऽपि॥१२॥

सोऽपि मासात्मा प्रजापतिः स्वावयवेऽहोरात्रे परिसमाप्यते। अहोरात्रो वै प्रजापतिः पूर्ववत्। तस्याप्यहरेव प्राणोऽत्ताऽग्नी रात्रिरेव रयिः पूर्ववत्, प्राणमहरात्मानं वा एते प्रस्कन्दन्ति निर्गमयन्ति शोषयन्ति वा स्वात्मनो विच्छिद्यापनयन्ति। के? ये दिवाऽहनि रत्या रति कारणभूतया सह स्त्रिया संयुज्यन्ते मैथुनमाचरन्ति मूढाः। यत एवं तस्मात्तन्न कर्तव्यमिति प्रतिषेधः प्रासङ्गिकः। यद्रात्रौ संयुज्यन्ते रत्या ऋतौ ब्रह्मचर्यमेव तदिति प्रशस्तत्वादृतौ भार्यागमनं कर्तव्यमिति। अयमपि प्रासङ्गिको विधिः। प्रकृतं तूच्यते, सोऽहोरात्रात्मकः प्रजापतिर्व्रीहियवाद्यन्नात्मना व्यवस्थितः॥१३॥

एवं क्रमेण परिणम्य तदन्नं वै प्रजापतिः। कथम्? ततस्तस्माद्ध वै रेतो नृबीजं तत्प्रजाकारणं तस्माद्योषिति सिक्तादिमा मनुष्यादिलक्षणाः प्रजाः प्रजायन्ते, यत्पृष्टं कुतो ह वै प्रजाः प्रजायन्त इति। तदेवं चन्द्रादित्यमिथुनादिक्रमेणाहोरात्रान्तेनान्नासृग्रेतोद्वारेणेमाः प्रजाः प्रजायन्ते इति निर्णीतम्॥१४॥

तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुन-
मुत्पादयन्ते। तेषामेवैष ब्रह्मलोको येषां
तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्॥१५॥
तेषामसौ विरजो ब्रह्मलोको न येषु
जिह्ममनृतं न माया चेति॥१६॥

इत्यथर्ववेदीयप्रश्नोपनिषदि प्रथमः प्रश्नः॥१॥

इस प्रकार जो भी (कोई गृहस्थ ऋतु काल में रात्रि के समय स्त्री-गमन रूप) प्रजापति व्रत का आचरण करते हैं, वे (पुत्र और पुत्री रूप) जोड़े को उत्पन्न करते हैं। जिनमें (इष्टादि कर्मानुष्ठान रूप) तप और पूर्वोक्त ब्रह्मचर्य है तथा जिनमें असत्य त्याग रूप सत्य स्थित है, उन्हीं को यह (चन्द्रलोक में स्थित पितृयाण रूप) ब्रह्मलोक प्राप्त होता है॥१५॥

जिन गृहस्थों में कुटिलता (क्रीड़ादि वशात्) अनृत और माया नहीं है, उन्हीं को यह विशुद्ध ब्रह्मलोक प्राप्त होता है (ऐसा एकान्तनिष्ठ ब्रह्मचारी, वानप्रस्थ और भिक्षुक में ही संभव है। कर्म और उपासना के समुच्चित अनुष्ठान से ही उक्त फल मिलता है, केवल कर्म से तो चन्द्रलोक की प्राप्ति होती है)॥१६॥

॥ इति प्रथमः प्रश्नः ॥

तत्तत्रैवं सति ये गृहस्थाः 'ह वै' इति प्रसिद्धिस्मरणार्थौ निपातौ। तत्प्रजापतेर्व्रतमृतौ भार्यागमनं चरन्ति कुर्वन्ति तेषां दृष्टफलमिदम्। किम्। ते मिथुनं पुत्रं दुहितरं चोत्पादयन्ते। अदृष्टं च फलमिष्टापूर्त्तदत्तकारिणां तेषामेवैष यश्चान्द्रमसो ब्रह्मलोकः पितृयाणलक्षणो येषां तपः स्नातकव्रतादीनि, ब्रह्मचर्यम् ऋतावन्यत्र मैथुनासमाचरणं ब्रह्मचर्यम्। येषु च सत्यमनृतवर्जनं प्रतिष्ठितमव्यभिचारितया वर्तते नित्यमेव॥१५॥

यस्तु पुनरादित्योपलक्षित उत्तरायणः प्राणात्मभावो विरजः शुद्धो न चन्द्रब्रह्मलोकवद्रजस्वलो वृद्धिक्षयादियुक्तोऽसौ केषां तेषामित्युच्यते। यथा गृहस्थानामनेकविरुद्धसंव्यवहारप्रयोजनवत्त्वाज्जिह्मं कौटिल्यं वक्रभावोऽवश्यंभावि,तथा न येषु जिह्मम्। यथा च गृहस्थानां क्रीडानर्मादिनिमित्तमनृतमवर्जनीयं,तथा न येषु तत्, तथा माया गृहस्थानामिव न येषु विद्यते। माया नाम बहिरन्यथाऽऽत्मानं प्रकाश्यान्यथैव कार्यं करोति सा माया मिथ्याचाररूपा। मायेत्येवमादयो दोषा येष्वधिकारिषु ब्रह्मचारिवानप्रस्थभिक्षुषु निमित्ताभावान्न विद्यन्ते तत्साधनानुरूपेणैव तेषामसौ विरजो ब्रह्मलोक इत्येषा ज्ञानयुक्तकर्मवतां गतिः। पूर्वोक्तस्तु ब्रह्मलोकः केवलकर्मिणां चन्द्रलक्षण इति॥१६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छंकरभगवतः कृतौ प्रश्नोपनिषद्भाष्ये प्रथमः प्रश्नः॥१॥

## अथ द्वितीयः प्रश्नः

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ। भगवन्क-
त्येव देवाः प्रजां विधारयन्ते कतर एतत्प्रका-
शयन्ते कः पुनरेषां वरिष्ठ इति॥१॥

तस्मै स होवाचाऽऽकाशो ह वा एष
देवो वायुरग्निरापः पृथिवी वाङ्मन-
श्चक्षुः श्रोत्रं च। ते प्रकाश्याभिवदन्ति
वयमेतद्बाणमवष्टभ्य विधारयामः॥२॥

उसके बाद पिप्पलाद मुनि से विदर्भदेशीय भार्गव ने पूछा— 'हे भगवन्! ( इस शरीर रूप ) प्रजा को कितने देवता धारण करते हैं तथा ( उन देवताओं में से ) कौन इसे प्रकाशित करते हैं और इन देवों में कौन प्रधान है'॥१॥

तब आचार्य पिप्पलाद ने उस भार्गव से कहा— 'निश्चय आकाश ही वह देव है। वायु, अग्नि, जल, पृथिवी, वाक् ( सभी कर्मेन्द्रियाँ ) मन और चक्षुः ( ज्ञानेन्द्रियाँ ) वे सभी देव अपनी-अपनी श्रेष्ठता के लिये महिमा को प्रकट करते हुए कहते हैं कि इस कार्य-कारण-संघात रूप शरीर को स्तम्भ की भाँति आश्रय देकर हम ही स्पष्टरूप से धारण करते हैं'॥२॥

---

॥ अथ श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम् ॥

प्राणोऽत्ता प्रजापतिरित्युक्तम्। तस्य प्रजापतित्वमत्तृत्वं चास्मिञ्शरीरेऽवधारयितव्यमित्ययं प्रश्न आरभ्यते—

अथानन्तरं ह किलैनं भार्गवो वैदर्भिः पप्रच्छ। हे भगवन्कत्येव देवाः प्रजां शरीरलक्षणां विधारयन्ते विशेषेण धारयन्ते। कतरे बुद्धीन्द्रियकर्मेन्द्रियविभक्तानामेतत्प्रकाशनं स्वमाहात्म्यप्रख्यापनं प्रकाशयन्ते। कोऽसौ पुनरेषां वरिष्ठः प्रधानः कार्यकरणलक्षणानामिति॥१॥

एवं पृष्टवते तस्मै स होवाच। आकाशो ह वा एष देवो वायुरग्निरापः पृथिवीत्येतानि पञ्च महाभूतानि शरीरारम्भकाणि वाङ्मनश्चक्षुः श्रोत्रमित्यादीनि कर्मेन्द्रियबुद्धीन्द्रियाणि च कार्यलक्षणाः करणलक्षणाश्च, ते देवा आत्मनो माहात्म्यं प्रकाश्याभिवदन्ति स्पर्धमाना अहंश्रेष्ठतायै, कथं वदन्ति? वयमेतद्बाणं कार्यकरणसंघातमवष्टभ्य प्रासादमिव

प्राण के प्राधान्य में दृष्टान्त।

तान्वरिष्ठः प्राण उवाच। मा मोहमापद्यथाह-
मेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य
विधारयामीति तेऽश्रद्दधाना बभूवुः॥३॥

सोऽभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्य-
थेतरे सर्वं एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने
सर्वे एव प्रातिष्ठन्ते। तद्यथा मक्षिका मधुकर-
राजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मिंश्च
प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते एवं वाङ्मन-
श्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुन्वन्ति॥४॥

इस प्रकार अभिमान से युक्त उन देवों के प्रति प्राण ने कहा— तुम लोग मोह को प्राप्त मत होवो, क्योंकि अपने को पाँच भागों में विभक्त कर मैं ही इस शरीर को आश्रय देकर धारण करता हूँ। किन्तु उन देवताओं ने उक्त बात पर विश्वास नहीं किया॥३॥

तब वह प्राण (इन्द्रियों की अश्रद्धा को देखकर) अभिमान पूर्वक मानों ऊपर उठने लगा, उसके ऊपर उठते ही और सभी प्राण ऊपर उठने लगे तथा उसके बैठ जाने पर सभी बैठ गये। जैसे रानी मक्खी के ऊपर उठने पर सभी मक्खियाँ ऊपर उठ जाती हैं और उसके बैठ जाने पर सभी बैठ जाती हैं। वैसे ही वाक्, मन, चक्षु और श्रोत्रादि भी (प्राण के साथ ही उठने और प्रतिष्ठित होने लगे)। तब से सभी इन्द्रियाँ सन्तुष्ट होकर मुख्य प्राण की स्तुति करने लगीं॥४॥

---

स्तम्भादयोऽविशिथिलीकृत्य विधारयामो विस्पष्टं धारयामः। मयैवैकेनायं संघातो ध्रियत इत्येकैकस्याभिप्रायः॥२॥

तानेवमभिमानवतो वरिष्ठो मुख्यः प्राण उवाचोक्तवान्। मा मैवं मोहमापाद्यथाविवेक-तयाऽभिमानं मा कुरुत, यस्मादहमेवैतद्बाणमवष्टभ्य विधारयामि पञ्चधाऽऽत्मानं प्रविभज्य प्राणादिवृत्तिभेदं स्वस्य कृत्वा विधारयामीत्युक्तवति च तस्मिंस्तेऽश्रद्दधाना अप्रत्ययवन्तो बभूवुः कथमेतदेवमिति॥३॥

स च प्राणस्तेषामश्रद्दधानतामालक्ष्याभिमानादूर्ध्वमुत्क्रमत इवेदमुत्क्रान्तवानिव सरोषान्निरपेक्षस्तस्मिन्नुत्क्रामति यद्वृत्तं तद्दृष्टान्तेन प्रत्यक्षीकरोति। तस्मिन्नुत्क्रामति

एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायु-
रेष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥५॥
अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्।
ऋचो यजूꣳषि सामानि यज्ञः क्षत्त्रं ब्रह्म च॥६॥

वह प्राण अग्नि होकर प्रज्वलित होता है, यह सूर्य (होकर प्रकाशित होता है) और यह मेघ (होकर बरसाता) है। यही इन्द्र (होकर प्रजा का पालन करता है तथा असुरों का वध करता) है। यह वायु है तथा यह देव ही पृथिवी चन्द्रमा (रूप से सबका धारण एवं पोषण करने वाला है) और जो कुछ स्थूल, सूक्ष्म एवं अमृत है, वह सब कुछ यही है॥५॥

जैसे रथ की नाभि में अरे लगे रहते हैं, वैसे ही ऋक्, यजुः और साम (तीन प्रकार के मन्त्र), उनसे निष्पन्न यज्ञ तथा ब्राह्मण-क्षत्रिय ये सब प्राण में ही स्थित हैं॥६॥

---

सत्यथानन्तरमेवेतरे सर्व एव प्राणाश्चक्षुरादय उत्क्रामन्ते उच्चक्रमिरे। तस्मिंश्च प्राणे प्रतिष्ठमाने तूष्णीं भवत्यनुत्क्रामति सति सर्वे एव प्रातिष्ठन्ते तूष्णीं व्यवस्थिता अभूवन्। तत्तत्र यथा लोके मक्षिका मधुकराः स्वराजानं मधुकरराजानमुत्क्रामन्तं प्रति सर्वा एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्ते प्रतितिष्ठन्ति। यथाऽयं दृष्टान्तः एवं वाङ्मनश्चक्षुः श्रोत्रं चेत्यादयस्त उत्सृज्याश्रद्दधानतां बुद्ध्वा प्राणमाहात्म्यं प्रीताः प्राणं स्तुन्वन्ति स्तुवन्ति॥४॥

कथम्—

एष प्राणोऽग्निः संस्तपति ज्वलति। तथैष सूर्यः सन्प्रकाशते। तथैष पर्जन्यः सन्वर्षति। किं च मघवानिन्द्रः सन्प्रजाः पालयति जिघांसत्यसुररक्षांसि। एष वायुरावहप्रवहादिभेदः। किं चैष पृथिवी रयिर्देवः सर्वस्य जगतः सन्मूर्तमसदमूर्तं चामृतं च यद्देवानां स्थितिकारणं किं बहुना॥५॥

अरा इव रथनाभौ श्रद्धादि नामान्तं सर्वं स्थितिकाले प्राण एव प्रतिष्ठितम्। तथर्चो यजूंषि सामानीति त्रिविधा मन्त्रास्तत्साध्यश्च यज्ञः क्षत्त्रं च सर्वस्य पालयितृ ब्रह्म च यज्ञादिकर्मकर्तृत्वेऽधिकृतं चैवैष प्राणः सर्वम्॥६॥

प्राण की स्तुति

**प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे। तुभ्यं प्राण प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि॥७॥**

हविषां प्रापयितृतमः

**देवानामसि वह्नितमः पितृणां प्रथमा स्वधा। ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि॥८॥**

चक्षुरादीनां देह धारणादि के लिये

**इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता।**

हे प्राण! तू ही जन्म लेता है। ये मनुष्यादि सम्पूर्ण प्रजाएँ तुझे ही (चक्षुरादि इन्द्रियों द्वारा) उपहार समर्पण करती हैं क्योंकि जो उन इन्द्रियों के साथ भोक्ता रूप से स्थित है, वह तू ही है॥७॥

देवताओं के लिये तू श्रेष्ठ वह्नितम है। नान्दीमुखादि श्राद्धों में पितरों के लिए प्रथम स्वधा तू है और अथर्वा श्रुति के अनुसार अंगों का रस रूप तू है अर्थात् देह धारणादि के लिये सत्य आचरण रूप तू है॥८॥

हे प्राण! तू परमेश्वर है, तू अपने तेज से (जगत् का संहार करने वाला) रुद्र है और

---

किंच—

यः प्रजापतिरपि स त्वमेव गर्भे चरसि पितुर्मातुश्च प्रतिरूपः सन्प्रतिजायसे प्रजापतित्वादेव प्रागेव सिद्धं तव मातृपितृत्वं सर्वदेहदेह्याकृतिच्छद्मनैकः प्राणः सर्वात्माऽसीत्यर्थः। तुभ्यं त्वदर्थं या इमा मनुष्याद्याः प्रजास्तु हे प्राण चक्षुरादिद्वारैर्बलिं हरन्ति। यस्त्वं प्राणैश्चक्षुरादिभिः सह प्रतितिष्ठसि सर्वशरीरेष्वतस्तुभ्यं बलिं हरन्तीति युक्तम्। भोक्ता हि यतस्त्वं तवैवान्यत्सर्वं भोज्यम्॥७॥

= यस्तत्त्वम् इत्यपि पाठः

किंच—

देवानामिन्द्रादीनामसि भवसि त्वं वह्नितमो हविषां प्रापयितृतमः। पितृणां नान्दीमुखे श्राद्धे या पितृभ्यो दीयते स्वधाऽन्नं सा देवप्रदानमपेक्ष्य प्रथमा भवति। तस्या अपि पितृभ्यः प्रापयिता त्वमेवेत्यर्थः। किंचर्षीणां चक्षुरादीनां प्राणानामङ्गिरसामङ्गिरसभूतानामथर्वणां तेषामेव 'प्राणो वाऽथर्वा' इति श्रुतेः। चरितं चेष्टितं सत्यमवितथं देहधारणाद्युपकारलक्षणं त्वमेवासि॥८॥

किंच—

इन्द्रः परमेश्वरस्त्वं हे प्राण तेजसा वीर्येण रुद्रोऽसि संहरञ्जगत्। स्थितौ च परि-

त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥९॥
यदा त्वमभिवर्षस्यथेमाः प्राणते प्रजाः।
आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥१०॥
व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः।
वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः ॥११॥

(अपने सौम्यरूप से तू ही जगत् का) सर्वतोभावेन संरक्षक है। तू अन्तरिक्ष में सदा गमन करता है और तू ही समस्त ज्योतियों का अधिपति सूर्य है ॥९॥

हे प्राण! जब तू मेघ होकर बरसता है, तब तेरी यह सम्पूर्ण प्रजा सुख को प्राप्त हुए के समान स्थित होती है कि अब यथेच्छ अन्न उत्पन्न होगा ॥१०॥

हे प्राण! तू (संस्कारकर्ता के अभाव में संस्कार हीन) व्रात्य है। तू आथर्वणों का एकर्षिनामक अग्नि होकर सम्पूर्ण हवियों का भोक्ता है तथा विश्व का सत्पति है। आज हम तेरे लिये भक्ष्य देने वाले हैं। हे मातरिश्वन्! तू हमारा पिता है ॥११॥

---

समन्ताद्रक्षिता पालयिता परिरक्षिता त्वमेव जगतः सौम्येन रूपेण। त्वमन्तरिक्षेऽजस्रं चरसि उदयास्तमयाभ्यां सूर्यस्त्वमेव च सर्वेषां ज्योतिषां पतिः ॥९॥

यदा पर्जन्यो भूत्वाऽभिवर्षसि त्वमथ तदाऽन्नं प्राप्येमाः प्रजाः प्राणते प्राणचेष्टां कुर्वन्तीत्यर्थः। अथवा प्राण! ते तवेमाः प्रजाः स्वात्मभूतास्त्वदन्नसंवर्धितास्त्वद-भिवर्षणदर्शनमात्रेण चाऽऽनन्दरूपाः सुखं प्राप्ता इव सत्यस्तिष्ठन्ति। कामायेच्छातोऽन्नं भविष्यतीत्येवमभिप्रायः ॥१०॥

किंच—

प्रथमजत्वादन्यस्य संस्कर्तुरभावादसंस्कृतो व्रात्यस्त्वं स्वभावत एव शुद्ध इत्यभिप्रायः। हे प्राणैकऋषिस्त्वमाथर्वणानां प्रसिद्ध एकर्षिनामाऽग्निः सन्नत्ता सर्वहविषाम्। त्वमेव विश्वस्य सर्वस्य सतो विद्यमानस्य पतिः सत्पतिः। साधुर्वा पतिः सत्पतिः। वयं पुनराद्यस्य तवादनीयस्य हविषो दातारः। त्वं पिता मातरिश्व हे मातरिश्वन्नोऽस्माकम्। अथ वा मातरिश्वनो वायोस्त्वम्। अतश्च सर्वस्यैव जगतः पितृत्वं सिद्धम् ॥११॥

या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि।
या च मनसि संतता शिवां तां कुरु मोत्क्रमीः॥१२॥

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम्।
मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति॥१३॥

इत्यथर्ववेदीयप्रश्नोपनिषदि द्वितीयः प्रश्नः॥२॥

तेरा जो स्वरूप (वक्ता की) वाणी में स्थित है तथा जो श्रोत्र, नेत्र और मन में व्याप्त है, उसे शान्त करो। तुम उत्क्रमण न करो अर्थात् इस देह को अमंगलमय न बनाओ॥१२॥

इस लोक में यह सब और स्वर्गलोक में देवादि के उपभोगरूप जो कुछ वैभव हैं, वे सब प्राण के ही अधीन हैं। जैसे माता पुत्रों की रक्षा करती है; वैसे ही तुम हमारी रक्षा करो तथा हमें श्री और प्रज्ञा प्रदान करो॥१३॥

॥ इति द्वितीयः प्रश्नः॥

---

किं बहुना—

या ते त्वदीया तनूर्वाचि प्रतिष्ठिता वक्तृत्वेन वदनचेष्टां कुर्वती। या श्रोत्रे या च चक्षुषि या च मनसि संकल्पादि व्यापारेण संतता समनुगता तनूस्तां शिवां शान्तां कुरु मोत्क्रमीरुत्क्रमणेनाशिवां मा कार्षीरित्यर्थः॥१२॥

किं बहुना—

अस्मिल्लोके प्राणस्यैव वशे सर्वमिदं यत्किंचिदुपभोगजातं त्रिदिवे तृतीयस्यां दिवि च यत्प्रतिष्ठितं देवाद्युपभोगलक्षणं तस्यापि प्राणः एवेशिता रक्षिता। अतो मातेव पुत्रानस्मान्रक्षस्व पालयस्व। त्वन्निमित्ता हि ब्राह्म्यः क्षात्त्रियाश्च श्रियस्तास्त्वं श्रीश्च श्रियश्च प्रज्ञां च त्वत्स्थितिनिमित्तां विधेहि नो विधत्स्वेत्यर्थः। इत्येवं सर्वात्मतया वागादिभिः प्राणैः स्तुत्या गमितमहिमा प्राणः प्रजापतिरत्तेत्यवधृतम्॥१३॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छंकरभगवतः कृतौ प्रश्नोपनिषद्भाष्ये द्वितीयप्रश्नः॥२॥

प्राण के सर्गादि प्रकार का प्रश्न

## अथ तृतीयः प्रश्नः

अथ हैनं कौसल्यश्चाऽऽश्वलायनः पप्रच्छ। भगवन्कुत एष प्राणो जायते, कथमायात्यस्मिञ्शरीर, आत्मानं वा प्रविभज्य कथं प्रातिष्ठते, केनोत्क्रमते कथं बाह्यमभिधत्ते, कथमध्यात्ममिति ॥ १॥ धारण करता है। अधिभूतं

महर्षि पिप्पलाद का उत्तर

तस्मै स होवाचातिप्रश्नान्पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २॥ कठिन, गम्भीर. इन्द्रियातीत सत्यता के विषय में प्रश्न.

आत्मन एष प्राणो जायते। यथैषा पुरुषे छायैत- परस्मात् अक्षरात् सत्यात्

तत्पश्चात् अश्वल के पुत्र कौसल्य ने महर्षि पिप्पलाद से पूछा— हे भगवन्! यह प्राण किस कारण विशेष से उत्पन्न होता है और किस व्यापार विशेष से किस शरीर में आता है तथा शरीर में प्रविष्ट अपने को विभक्त कर किस प्रकार स्थित होता है, फिर शरीर से उत्क्रमण क्यों करता है और किस प्रकार बाह्य तथा आभ्यन्तर शरीर को धारण करता है॥१॥

उससे आचार्य पिप्पलाद ने कहा— तू प्राणदि के उत्पत्ति विषयक अत्यन्त कठिन प्रश्न पूछता है फिर भी तू बड़ा ब्रह्मवेत्ता है। अतः मैं प्रसन्न होकर तेरे प्रश्नों का उत्तर देता हूँ॥२॥

आत्मा से यह प्राण उत्पन्न होता है। जैसे लोक में मनुष्य शरीर से छाया उत्पन्न होती

---

॥ अथ श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम् ॥

अथ हैनं कौसल्यश्चाऽऽश्वलायनः पप्रच्छ। प्राणो ह्येवं प्राणैर्निर्धारिततत्त्वैरुपलब्धमहिमाऽपि संहतत्वात्स्यादस्य कार्यत्वमतः पृच्छामि। भगवन्कुतः कस्मात्कारणादेष यथावधृतः प्राणो जायते। जातश्च कथं केन वृत्तिविशेषेणाऽऽयात्यस्मिञ्शरीरे। किंनिमित्तकमस्य शरीरग्रहणमित्यर्थः। प्रविष्टश्च शरीरे आत्मानं वा प्रविभज्य प्रविभागं कृत्वा कथं केन प्रकारेण प्रातिष्ठते प्रतितिष्ठति। केन वा वृत्तिविशेषेणास्माच्छरीरादुत्क्रमते उत्क्रामति। कथं बाह्यमधिभूतमधिदैवतं चाभिधत्ते धारयति कथमध्यात्ममिति धारयतीति शेषः॥१॥

एवं पृष्टस्तस्मै स होवाचाऽऽचार्यः। प्राण एव तावद्दुर्विज्ञेयत्वाद्विषमप्रश्नार्हस्तस्यापि जन्मादि त्वं पृच्छस्यतोऽतिप्रश्नान्पृच्छसि। ब्रह्मिष्ठोऽसीत्यतिशयेन त्वं ब्रह्मविदतस्तुष्टोऽहं तस्मात्ते तुभ्यं ब्रवीमि यत्पृष्टं शृणु॥२॥ इन्द्रियातीत सत्यता के विषय में प्रश्न

आत्मनः परस्मात्पुरुषादक्षरात्सत्यादेष उक्तः प्राणो जायते। कथमित्यत्र दृष्टान्तः।

अश्वमेध के समान पुण्य नहीं भ्रूणहत्या के समान पाप नहीं॥



स्मिन्नेतदाततं मनोकृतेनाऽऽयात्यस्मिञ्शरीरे ॥ ३ ॥

यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान्ग्रा-
मानेतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण
इतरान्प्राणान्पृथक्पृथगेव संनिधत्ते ॥ ४ ॥

पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासि-
काभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु

है, वैसे ही इस आत्मा में प्राण व्याप्त है तथा यह मनोजन्य संकल्पादि से इस शरीर में आता है॥३॥

जैसे राजा ही, ''तुम इन ग्रामों में और तुम इन ग्रामों में निवास करो'' इस प्रकार अधिकारियों को नियुक्त करता है, वैसे ही यह मुख्य प्राण भी अन्य इन्द्रियों को इनके स्थानों के अनुसार पृथक्-पृथक् नियुक्त करता है॥४॥

यह प्राण गुदा और मूत्रेन्द्रिय में अपान को ( मलमूत्र त्याग के लिये नियुक्त करता है ) एवं मुख तथा नासिका से निकलता हुआ चक्षु और श्रोत्र में स्वयं सम्राट् रूप से स्थित रहता

---

यथा लोके एषा पुरुषे शिरःपाण्यादिलक्षणे निमित्ते छाया नैमित्तिकी जायते तद्वदेतस्मिन्ब्रह्मण्येतत्प्राणाख्यं छायास्थानीयमनृतरूपं तत्त्वं सत्ये पुरुषे आततं समर्पितमित्येतत् छायेव देहे। मनोकृतेन मनःसंकल्पेच्छादिनिष्पन्नकर्मनिमित्तेनेत्येतद्वक्ष्यति हि ''पुण्येन पुण्यम्'' ( प्र० उ० ३/७ ) इत्यादि। तदेव ''सक्तः सह कर्मणा'' ( बृ० उ० ४/४/६ ) इति च श्रुत्यन्तरात्। आयात्यागच्छत्यस्मिञ्शरीरे॥३॥

यथा येन प्रकारेण लोके राजा सम्राडेव ग्रामादिष्वधिकृतान्विनियुङ्क्ते। कथम्? एतान्ग्रामानेतान्ग्रामानधितिष्ठस्वेति। एवमेव यथा दृष्टान्तः। एष मुख्यःप्राण इतरान्प्राणांश्चक्षुरादीनात्मभेदांश्च पृथक्पृथगेव यथास्थानं संनिधत्ते विनियुङ्क्ते॥४॥

तत्र विभागः—

पायूपस्थे पायुश्चोपस्थश्च पायूपस्थं तस्मिन्। अपानमात्मभेदं मूत्रपुरीषाद्यपनयनं कुर्वंस्तिष्ठति संनिधत्ते। तथा चक्षुःश्रोत्रे चक्षुश्च श्रोत्रं च चक्षुश्रोत्रं तस्मिंश्चक्षुःश्रोत्रे।

समानः। एष ह्येतद्धुतमन्नं समं नयति
तस्मादेताः सप्तार्चिषो भवन्ति ॥५॥

हृदि ह्येष आत्मा। अत्रैतदेकशतं नाडीनां तासां
शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशा-
खानाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥ ६ ॥

है और मध्य में समान रहता है। यह समान वायु ही खाये-पीये हुये अन्न जल को शरीर में सर्वत्र समभाव से ले जाता है। उसी जठराग्नि से शिरोवर्ती ये सात ज्वालाएँ उत्पन्न होती हैं॥५॥

यह जीवात्मा हृदयाकाश में स्थित है, इस हृदयदेश में एक सौ एक (प्रधान) नाड़ियाँ हैं। उनमें से प्रत्येक प्रधान नाड़ी की सौ-सौ शाखाएँ हैं और फिर उन सौ भेदों में से बहत्तर-बहत्तर हजार प्रति शाखा नाड़ियाँ हैं। इन सभी नाड़ियों में व्यान वायु विचरता है॥६॥

---

मुखनासिकाभ्यां च मुखं च नासिका च ताभ्यां मुखनासिकाभ्यां च निर्गच्छन्प्राणः स्वयं सम्राट्स्थानीयः प्रातिष्ठते प्रतितिष्ठति। मध्ये तु प्राणापानयोः स्थानयोर्नाभ्याम्। समानोऽशितं पीतं च समं नयतीति समानः। एष हि यस्माद्यदेतद्धुतं भुक्तं पीतं चाऽऽत्माग्नौ प्रक्षिप्तमन्नं समं नयति तस्मादशितपीतेन्धनादग्नेरौदर्याद्धृदयदेशं प्राप्तादेताः सप्तसंख्याका अर्चिषो दीप्तयो निर्गच्छन्त्यो भवन्ति शीर्षण्यः प्राणद्वारा दर्शनश्रवणादिलक्षणरूपादिविषयप्रकाशा इत्यभिप्रायः॥५॥

हृदि ह्येष पुण्डरीकाकारमांसपिण्डपरिच्छिन्ने हृदयाकाशे एष आत्माऽऽत्मना संयुक्तो लिङ्गात्मा, अत्रास्मिन्हृदये एतदेकशतमेकोत्तरशतं संख्यया प्रधाननाडीनांभवतीति। तासां शतं शतमेकैकस्याः प्रधाननाड्या भेदाः। पुनरपि द्वासप्ततिर्द्वासप्ततिर्द्वे द्वे सहस्रे अधिके सप्ततिश्च सहस्राणि। सहस्राणां द्वासप्ततिः प्रतिशाखानाडीसहस्राणि प्रतिप्रतिनाडीशतं संख्यया प्रधाननाडीनां सहस्राणि भवन्ति। आसु नाडीषु व्यानो वायुश्चरति। व्यानो व्यापनात्। आदित्यादिव रश्मयो हृदयात्सर्वतोगामिनीभिर्नाडीभिः सर्वदेहं संव्याप्य व्यानो वर्तते। संधिस्कन्धमर्मदेशेषु विशेषेण प्राणापानवृत्त्योश्च मध्ये उद्भूतवृत्तिर्वीर्यवत्कर्मकर्ता भवति॥६॥

**अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥**

**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥ ८ ॥**

तथा (उन एक सौ एक नाड़ियों में से सुषुम्ना की ऊर्ध्वगामिनी) एक नाड़ी द्वारा ऊपर की ओर जाने वाला उदान वायु (जीवात्मा को) शास्त्रोक्त कर्म से देवादि पुण्यलोक को प्राप्त कराता है और शास्त्र निषिद्ध पाप कर्म से तिर्यगादि पापमय लोक को ले जाता है, एवं पुण्य-पाप दोनों प्रकार के मिश्रित कर्मो द्वारा उसे मनुष्य लोक में ले जाता है॥७॥

निश्चय आदित्य ही अधिदैवत ब्राह्य प्राण है। यह नेत्रस्थ चाक्षुष इस आध्यात्मिक प्राण पर अनुग्रह करता हुआ प्रकाशित होता है। पृथिवी में जो देवता है, वह पुरुष के अपान वायु को अपने अधीन करके रहता है। इन दोनों के मध्यवर्ती आकाशस्थ वह समान वायु है, एवं इनसे भिन्न व्यापक वायु ही व्यान है॥८॥

---

अथ या तु तत्रैकशतानां नाडीनां मध्ये ऊर्ध्वगा सुषुम्नाख्या नाडी, तयैकयोर्ध्वः सन्नुदानो वायुरापादतलमस्तकवृत्तिः संचरन्पुण्येन कर्मणा शास्त्रविहितेन पुण्यं लोकं देवादिस्थानलक्षणं नयति प्रापयति। पापेन तद्विपरीतेन पापं नरकं तिर्यग्योन्यादिलक्षणम्, उभाभ्यां समप्रधानाभ्यां पुण्यपापाभ्यामेव मनुष्यलोकं नयतीत्यनुवर्तते॥७॥

आदित्यो ह वै प्रसिद्धो ह्यधिदैवतं बाह्यः प्राणः स एष उदयत्युद्गच्छति। एष ह्येनमाध्यात्मिकं चक्षुषि भवं चाक्षुषं प्राणं प्रकाशेनानुगृह्णानो रूपोपलब्धौ चक्षुषःआलोकं कुर्वन्नित्यर्थः। तथा पृथिव्यामभिमानिनी या देवता प्रसिद्धा सैषा पुरुषस्यापानमपानवृत्तिमवष्टभ्याऽऽकृष्य वशीकृत्याधः एवापकर्षणेनानुग्रहं कुर्वती वर्तते इत्यर्थः। अन्यथा हि शरीरं गुरुत्वात्पतेत्सावकाशे वोद्गच्छेत्। यदेतदन्तरा मध्ये द्यावापृथिव्योर्य आकाशस्तत्स्थो वायुराकाश उच्यते मञ्चस्थवत्। स समानः समानमनुगृह्णानो वर्तते इत्यर्थः। समानस्यान्तराकाशस्थत्वसामान्यात्। सामान्येन च यो बाह्यो वायुः स व्याप्तिसामान्याद्व्यानो व्यानमनुगृह्णानो वर्तते इत्यभिप्रायः॥८॥

**तेजो ह वाव उदानस्तस्मादुपशान्ततेजाः।**
**पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः॥९॥**
**यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः।**
**सहाऽऽत्मना यथासंकल्पितं लोकं नयति॥१०॥**

**य एवं विद्वान्प्राणं वेद। न हास्य प्रजा**
**हीयतेऽमृतो भवति तदेष श्लोकः॥११॥**

लोक प्रसिद्ध सूर्य तेज ही उदान है। अतः जिसकी शारीरिक ऊष्मा शान्त हो जाती है, वह मन में विलीन हुई वागादि इन्द्रियों के सहित देहान्तर को प्राप्त होती है॥९॥

जिसका जैसा चित्त संकल्प करता है, उस संकल्प के सहित वह जीव मुख्य प्राण वृत्ति को प्राप्त होता है तथा वह प्राण उदान वृत्तिरूप तेज से संयुक्त हो भोक्ता जीव के सहित संकल्पानुरूप लोक को प्राप्त कराता है॥१०॥

जो विद्वान् पुरुष पूर्वोक्त विशेषणों से युक्त प्राण को इस प्रकार जानता है, उसकी पुत्र-पौत्रादि प्रजा नष्ट नहीं होती और (सायुज्य को प्राप्त हो जाने के कारण) वह अमर हो जाता है। इस विषय में यह मन्त्र है॥११॥

---

यद्बाह्यं ह वै प्रसिद्धं सामान्यं तेजस्तच्छरीरे उदान उदानं वायुमनुगृह्णाति स्वेन प्रकाशेनेत्यभिप्रायः। यस्मात्तेजःस्वभावो बाह्यतेजोनुगृहीत उत्क्रान्तिकर्ता तस्माद्यदा लौकिकः पुरुष उपशान्ततेजा भवति। उपशान्तं स्वाभाविकं तेजो यस्य सः। तदा तं क्षीणायुषं मुमूर्षुं विद्यात्। स पुनर्भवं शरीरान्तरं प्रतिपद्यते। कथम्। सहेन्द्रियैर्मनसि संपद्यमानैः प्रविशद्भिर्वागादिभिः॥९॥

मरणकाले यच्चित्तो भवति तेनैष जीवश्चित्तेन संकल्पेनेन्द्रियैः सह प्राणं मुख्य-प्राणवृत्तिमायाति। मरणकाले क्षीणेन्द्रियवृत्तिः सन्मुख्यया प्राणवृत्त्यैवावतिष्ठत इत्यर्थः। तदा हि वदन्ति ज्ञातय उच्छ्वसिति जीवतीति। स च प्राणस्तेजसोदानवृत्त्या युक्तः सन्स-हाऽऽत्मना स्वामिना भोक्त्रा स एवमुदानवृत्त्यैव युक्तः प्राणस्तं भोक्तारं पुण्यपा-पकर्मवशाद्यथासंकल्पितं यथाभिप्रेतं लोकं नयति प्रापयति॥१०॥

यः कश्चिदेवं विद्वान्यथोक्तविशेषणैर्विशिष्टमुत्पत्त्यादिभिः प्राणं वेद जानाति तस्येदं

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा।
अध्यात्मं चैव प्राणस्य विज्ञायामृतम-
श्नुते विज्ञायामृतमश्नुत इति॥१२॥

इत्यथर्ववेदीयप्रश्नोपनिषदि तृतीयः प्रश्नः ॥३॥

प्राण की ( परमात्मा से ) उत्पत्ति ( मनःसंकल्प से इस शरीर में ) आगमन ( पायूपस्थादि में ) स्थान, पंचवृत्ति भेद के कारण व्यापकता एवं आदित्यादि बाह्य तथा चक्षुरादि आध्यात्मिक रूप से प्राण के भेद को जानकर साधक अमरत्व को प्राप्त कर लेता है, ऐसा जानकर अमरत्व को प्राप्त करता है॥१२॥

॥ इति तृतीयः प्रश्नः ॥

---

फलमैहिकमामुष्मिकं चोच्यते। न हास्य नैवास्य विदुषः प्रजा पुत्रपौत्रादिलक्षणा हीयते छिद्यते। पतिते च शरीरे प्राणसायुज्यतयाऽमृतोऽमरणधर्मा भवति,तदेतस्मिन्नर्थे संक्षेपा-भिधायकः एष श्लोको मन्त्रो भवति॥११॥

उत्पत्तिं परमात्मनः प्राणस्याऽऽयतिमागमनं मनोकृतेनास्मिञ्शरीरे,स्थानं स्थितिं च पायूपस्थादिस्थानेषु,विभुत्वं च स्वाम्यमेव सम्राडिव प्राणवृत्तिभेदानां पञ्चधा स्थापनम्। बाह्यमादित्यादिरूपेणाध्यात्मं चैव चक्षुराद्याकारेणावस्थानं विज्ञायैवं प्राणममृतमश्नुते इति। विज्ञायामृतमश्नुते इति द्विर्वचनं प्रश्नार्थपरिसमाप्त्यर्थम्॥१२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छंकरभगवतः कृतौ प्रश्नोपनिषद्भाष्ये तृतीयः प्रश्नः॥३॥

॥ १ आह्निकम्॥

## अथ चतुर्थः प्रश्नः।

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ।
भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति, कान्यस्मिञ्जाग्रति,
कतर एष देवः स्वप्नान्पश्यति, कस्यैतत्सुखं
भवति, कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीति ॥१॥

उसके बाद इन पिप्पलाद महर्षि से सूर्य के पौत्र सौर्यायणी गार्ग्य ने पूछा — 'हे भगवन! इस (सिर और हाथ पैर वाले) पुरुष में कौन इन्द्रियाँ सोती हैं, कौन इसमें जागती हैं, (जाग्रत् और स्वप्न के व्यापार समाप्त हो जाने पर) किसे यह सुख होता है और किसमें ये सभी इन्द्रियाँ प्रतिष्ठित होती हैं'॥१॥

---

### ॥अथ श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम्॥

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छः प्रश्नत्रयेणापरविद्यागोचरं सर्वं परिसमाप्य संसारं व्याकृतविषयं साध्यसाधनलक्षणमनित्यम्। अथेदानीमसाध्यसाधनलक्षणमप्राणममनोगोचरमतीन्द्रियविषयं शिवं शान्तमविकृतमक्षरं सत्यं परविद्यागम्यं पुरुषाख्यं सबाह्याभ्यन्तरमजं वक्तव्यमित्युत्तरं प्रश्नत्रयमारभ्यते।

तत्र सुदीप्तादिवाग्नेर्यस्मात्परादक्षरात्सर्वे भावा विस्फुलिङ्गा इव जायन्ते तत्र चैवापियन्तीत्युक्तं द्वितीये मुण्डके, के ते सर्वे भावा अक्षराद्विभज्यन्ते। कथं वा विभक्ताः सन्तस्तत्रैवापियन्ति। किं लक्षणं वा तदक्षरमिति। एतद्विवक्षयाऽधुना प्रश्नानुद्भावयति—

भगवन्नेतस्मिन्पुरुषे शिरःपाण्यादिमति कानि करणानि स्वपन्ति स्वापं कुर्वन्ति, स्वव्यापारादुपरमन्ते कानिचास्मिञ्जाग्रति जागरणमनिद्रावस्थां स्वव्यापारं कुर्वन्ति। कतरः कार्यकरणलक्षणयोरेष देवः स्वप्नान्पश्यति। स्वप्नो नाम जाग्रद्दर्शनान्निवृत्तस्य जाग्रद्वदन्तःशरीरे यद्दर्शनम्। तत्किं कार्यलक्षणेन देवेन निर्वर्त्यते, किंवा करणलक्षणेन केनचिदित्यभिप्रायः। उपरते च जाग्रत्स्वप्नव्यापारे यत्प्रसन्नं निरायासलक्षणमनाबाधं सुखं कस्यैतद्भवति। तस्मिन्काले जाग्रत्स्वप्नव्यापारादुपरताः सन्तः कस्मिन्नु सर्वे सम्यगेकीभूताः संप्रतिष्ठिताः। मधुनिरसवत्समुद्रं प्रविष्टनद्यादिवच्च विवेकानर्हाः प्रतिष्ठिता भवन्ति संगताः संप्रतिष्ठिता भवन्तीत्यर्थः। ननु न्यस्तदात्रादिकरणवत्स्वव्यापारादुपरतानि पृथक्पृथगेव स्वात्मन्यवतिष्ठन्त इत्येतद्युक्तं

तस्मै स होवाच। यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकी भवन्ति। ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकी भवति। तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽऽदत्ते नाऽऽनन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥२॥

आचार्य ने उस प्रश्नकर्ता से कहा — 'हे गार्ग्य! जैसे सूर्य के अस्त हो जाने पर सम्पूर्ण किरणें उस तेजोमण्डल सूर्य में ही एकत्रित हो जाती हैं तथा उसी सूर्य के पुनः उदय होने पर वे रश्मियाँ उससे निकलकर फिर सर्वत्र फैल जाती हैं, उसी प्रकार वे इन्द्रियाँ और विषय परम देव में अभिन्न हो जाती हैं। अतः उस निद्रा काल में वह (देवदत्तादि रूप पुरुष) न सुनता है, न देखता है, न सूँघता है, न रस लेता है, न स्पर्श करता है, न बोलता है, न पकड़ता है, न आनन्द भोगता है, न त्यागता है और न चेष्टा करता है। इसीलिये लौकिक पुरुष उसे 'सोता है' ऐसा कहते हैं ॥२॥

---

कुतः प्राप्तिः सुषुप्तपुरुषाणां करणानां कस्मिंश्चिदेकीभावगमनाशङ्कायाः प्रष्टुः। युक्तैव त्वाशङ्का। यतः संहतानि करणानि स्वाम्यर्थानि परतन्त्राणि च जाग्रद्विषये तस्मात्स्वापेऽपि संहतानां पारतन्त्र्येणैव कस्मिंश्चित्संगतिर्न्याय्येति तस्मादाशङ्कानुरूप एव प्रश्नोऽयम्। अत्र तु कार्यकरणसंघातो यस्मिंश्च प्रलीनः सुषुप्तप्रलयकालयोस्तद्विशेषं बुभुत्सोः स को नु स्यादिति कस्मिन्सर्वे संप्रतिष्ठिता भवन्तीति ॥१॥

तस्मै स होवाचाऽऽचार्यः। शृणु हे गार्ग्य यत्त्वया पृष्टम्। यथा मरीचयो रश्मयोऽर्कस्याऽऽदित्यस्यास्तमदर्शनं गच्छतः सर्वा अशेषत एतस्मिंस्तेजोमण्डले तेजोराशिरूप एकी भवन्ति विवेकानर्हत्वमविशेषतां गच्छन्ति, मरीचयस्तस्यैवार्कस्य ताः पुनः पुनरुदयत उद्गच्छतः प्रचरन्ति विकीर्यन्ते। यथाऽयं दृष्टान्तः। एवं ह वै तत्सर्वं विषयेन्द्रियादिजातं परे प्रकृष्टे देवे द्योतनवति मनसि चक्षुरादि देवानां मनस्तन्त्रत्वात्परो देवो मनस्तस्मिन्स्वप्नकाल एकी भवति, मण्डले मरीचिवदविशेषतां गच्छति। जिजागरिषोश्च रश्मिवन्मण्डलान्मनस एव प्रचरति स्वव्यापाराय प्रतिष्ठते। यस्मात्स्वप्नकाले श्रोत्रादीनि शब्दाद्युपलब्धिकरणानि

**प्राणाग्नय एवैतस्मिन्पुरे जाग्रति। गार्हपत्यो ह**
**वा एषोऽपानो, व्यानोऽन्वाहार्यपचनो, यद्गार्ह-**
**पत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥३॥**
**यदुच्छ्‌वासनिश्‍वासावेतावाहुती समं नयतीति स**
**समानः। मनो ह वाव यजमान इष्टफलमेवो-**
**दानः स एनं यजमानमहरहर्ब्रह्म गमयति॥४॥**

इस (नौ द्वार वाले शरीर रूप) पुर में प्राणाग्नि ही जागते हैं। निश्चय यह अपान ही गार्हपत्य अग्नि है। व्यान (हृदय कमल के दक्षिण छिद्र द्वारा निकलने के कारण दक्षिण दिशा से सम्बन्ध के कारण) दक्षिणाग्नि है और जो गार्हपत्य से ले जाया जाता है वह प्राण ही प्रणयन के कारण आहवनीय नामक अग्नि है॥३॥

क्योंकि उच्छ्‌वास और निश्वास— ये अग्निहोत्र की आहुतियों के समान है (देह रक्षा के लिये) इन्हें जो समभाव से सर्वदा चलाता है, वह समान ऋत्विक् है। निश्चय ही मन यजमान है और उदान वायु ही इष्टफल है। वह उदान वायु इस मन नामक यजमान को (स्वप्न व्यापार से भी गिरा कर) नित्य प्रति सुषुप्ति में ब्रह्म के पास ले जाता है॥४॥

---

मनस्येकीभूतानीव करणव्यापारादुपरतानि तेन तस्मात्तर्हि तस्मिन्स्वापकाले एष देवदत्तादिलक्षणः पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽऽदत्ते नाऽऽनन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते लौकिकाः॥२॥

सुप्तवत्सु श्रोत्रादिषु करणेष्वस्मिन्पुरे नवद्वारे देहे प्राणाग्नयः प्राणादिपञ्चवायवोऽग्नय इवाग्नयो जाग्रति। अग्निसामान्यं ह्याह गार्हपत्यो ह वा एषोऽपानः। कथमित्याह— यस्माद्गार्हपत्यादग्नेरग्निहोत्रकाल इतरोऽग्निराहवनीयः प्रणीयते,प्रणयनात्प्रणीयतेऽस्मादिति प्रणयनो गार्हपत्योऽग्निः। तथा सुप्तस्यापानवृत्तेः प्रणीत इव प्राणो मुखनासिकाभ्यां संचरत्यत आहवनीयस्थानीयः प्राणः। व्यानस्तु हृदयाद्दक्षिणसुषिरद्वारेण निर्गमाद्दक्षिण-दिक्संबन्धादन्वाहार्यपचनो दक्षिणाग्निः॥३॥

अत्र च होताऽग्निहोत्रस्य यद्यस्मादुच्छ्‌वासनिश्वासावग्निहोत्राहुती इव नित्यं द्वित्वसामान्यादेव त्वेतावाहुती समं साम्येन शरीरस्थितिभावाय नयति यो वायुरग्निस्थानी-

**अत्रैष देवः स्वप्ने महिमानमनुभवति। यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देश-दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति॥५॥**

इस ( श्रोत्रादि इन्द्रियों के उपरतरूप स्वपन ) अवस्था में यह देव अपनी महिमा का अनुभव करता है। इसने जाग्रद् अवस्था में जिसे देखा है, उसी दृष्ट वस्तु को स्वप्न में पुनः देखता है। प्रत्येक सुनी हुई बातों को फिर सुनता है और दिशा तथा विदिशा में अनुभूत वस्तु को ही पुनः-पुनः अनुभव करता है। ( विशेष क्या कहें ) इस जन्म में देखे और जन्मान्तर में सुने वैसे ही अनुभूत और अननुभूत, पृथिव्यादि सत् और मृगजलादि असत् सभी प्रकार की वस्तु को देखता है और वह सर्वरूप से मनोदेव स्वप्न को देखता है॥५॥

---

योऽपि होता चाऽऽहुत्योर्नेतृत्वात्। कोऽसौ स समानः। अतश्च विदुषः स्वापोऽप्यग्निहोत्रहवनमेव। तस्माद्विद्वान्नाकर्मीत्येवं मन्तव्य इत्यभिप्रायः। सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपत; इति हि वाजसनेयके। अत्र हि जाग्रत्सु प्राणाग्निषूपसंहृत्य बाह्यकरणानि विषयांश्चाग्निहोत्रफलमिव स्वर्गं ब्रह्म जिगमिषुर्मनो ह वाव यजमानो जागर्ति यजमानवत्कार्यकरणेषु प्राधान्येन संव्यवहारात्स्वर्गमिव ब्रह्म प्रति प्रस्थितत्वाद्यजमानो मनः कल्प्यते। इष्टफलं यागफलमेवोदानो वायुः। उदाननिमित्तत्वादिष्टफलप्राप्तेः। कथम्, स उदानो मनआख्यं यजमानं स्वप्नवृत्तिरूपादपि प्रच्याव्याहरहः सुषुप्तिकाले स्वर्गमिव ब्रह्माक्षरं गमयति। अतो यागफलस्थानीयःउदानः॥४॥

एवं विदुषः श्रोत्राद्युपरमकालादारभ्य यावत्सुप्तोत्थितो भवति तावत्सर्वयागफलानुभव एव नाविदुषामिवानर्थायेति विद्वत्ता स्तूयते। न हि विदुष एव श्रोत्रादीनि स्वपन्ते प्राणाग्नयो वा जाग्रति जाग्रत्स्वप्नयोर्मनः स्वातन्त्र्यमनुभवदहरहः सुषुप्तं वा प्रतिपद्यते। समानं हि सर्वप्राणिनां पर्यायेण जाग्रत्स्वप्नसुषुप्तिगमनमतो विद्वत्तास्तुतिरेवेयमुपपद्यते। यत्पृष्टं कतर एष देवः स्वप्नान्पश्यतीति तदाह—

अत्रोपरतेषु श्रोत्रादिषु देहरक्षायै जाग्रत्सु प्राणादिवायुषु प्राक्सुषुप्तिप्रतिपत्तेः।

एतस्मिन्नन्तराल एष देवोऽर्करश्मिवत्स्वात्मनि संहृतश्रोत्रादिकरणः स्वप्ने महिमानं विभूतिं विषयविषयिलक्षणमनेकात्मभावगमनमनुभवति प्रतिपद्यते।

ननु महिमानुभवने करणं मनोऽनुभवितुस्तत्कथं स्वातन्त्र्येणानुभवतीत्युच्यते,स्वतन्त्रो हि क्षेत्रज्ञः। नैष दोषः। क्षेत्रज्ञस्य स्वातन्त्र्यस्य मनउपाधिकृतत्वान्न हि क्षेत्रज्ञः परमार्थतः स्वतः स्वपिति जागर्ति वा। मनउपाधिकृतमेव तस्य जागरणं स्वप्नश्चेत्युक्तं वाजसनेयके — "सधीः स्वप्नो भूत्वा ध्यायतीव लेलायतीव" ( बृ० उ० ४/३/७ ) इत्यादि। तस्मान्मनसो विभूत्यनुभवे स्वातन्त्र्यवचनं न्याय्यमेव। मनउपाधिसहितत्वे स्वप्नकाले क्षेत्रज्ञस्य स्वयंज्योतिष्ट्वं बाध्येतेति केचित्। तन्न। श्रुत्यर्थापरिज्ञानकृता भ्रान्तिस्तेषाम्। यस्मात्स्वयंज्योतिष्ट्वादिव्यवहारोऽप्यामोक्षान्तः सर्वोऽविद्याविषय एव मनआद्युपाधिजनितः।

"यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्" ( बृ० ४/३/३१ ) "मात्रासंसर्गस्त्वस्य भवति।" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" ( बृ० २/४/१४ ) इत्यादिश्रुतिभ्यः। अतो मन्दब्रह्मविदामेवेयमाशङ्का न त्वेकात्मविदाम्। नन्वेवं सत्यत्रायं पुरुषः स्वयंज्योतिरिति विशेषणमनर्थकं भवत्यत्रोच्यते। अत्यल्पमिदमुच्यते "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते" ( बृ० २/१/१७ ) इत्यन्तर्हृदयपरिच्छेदे सुतरां स्वयंज्योतिष्ट्वं बाध्येत, सत्यमेवमयं दोषो यद्यपि स्यात्स्वप्ने केवलतया स्वयंज्योतिष्ट्वेनार्धं तावदपनीतं भारस्येति चेन्न। तत्रापि पुरीतति नाडीषु शेते इति श्रुतेः पुरीतति नाडीसंबन्धात्तत्रापि पुरुषस्य स्वयंज्योतिष्ट्वेनार्धभारापनयाभिप्रायो मृषैव। कथं तर्ह्यत्रायं पुरुषः स्वयंज्योतिरिति। अन्यशाखात्वादनपेक्षा सा श्रुतिरिति चेन्न। अर्थैकत्वस्येष्टत्वादेको ह्यात्मा सर्ववेदान्तानामर्थो विजिज्ञापयिषितो बुभुत्सितश्च। तस्माद्युक्ता स्वप्ने आत्मनः स्वयंज्योतिष्ट्वोपपत्तिर्वक्तुम्, श्रुतेर्यथार्थतत्त्वप्रकाशकत्वात्। एवं तर्हि शृणु श्रुत्यर्थं हित्वा सर्वमभिमानं न त्वभिमानेन वर्षशतेनापि श्रुत्यर्थो ज्ञातुं शक्यते सर्वैः पण्डितंमन्यैः।

यथा हृदयाकाशे पुरीतति नाडीषु च स्वपतस्तत्संबन्धाभावात्ततो विविच्य दर्शयितुं शक्यत इत्यात्मनः स्वयंज्योतिष्ट्वं न बाध्यते। एवं मनस्यविद्याकामकर्मनिमित्तोद्भूतवासनावति कर्मनिमित्तवासनाऽविद्ययाऽन्यद्वस्त्वन्तरमिव पश्यतः सर्वकार्यकरणेभ्यः प्रविविक्तस्य द्रष्टुर्वासनाभ्यो दृश्यरूपाभ्योऽन्यत्वेन स्वयंज्योतिष्ट्वं सुदर्पितेनापि तार्किकेण न वारयितुं शक्यते। तस्मात्साधूक्तं मनसि प्रलीनेषु करणेष्वप्रलीने न मनसि मनोमयः स्वप्नान्पश्यतीति।

**स यदा तेजसाऽभिभूतो भवति। अत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्शरीर एतत्सुखं भवति॥६॥**

**स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते। एवं ह वै तत्सर्वं परे आत्मनि संप्रतिष्ठते॥७॥**

जब वह मनोदेव (नाड़ी में रहने वाले पित्त नामक सौर) तेज से सर्वथा अभिभूत हो जाता है तब यह आत्मदेव स्वप्न नहीं देखता (क्योंकि उन्हें देखने का द्वार तेज से अवरुद्ध हो चुका है) उसके बाद इस शरीर में (साक्षी चैतन्य से) यह सुख जाना जाता है॥६॥

हे सोम्य! जैसे पक्षी अपने बसेरे वृक्ष की ओर जाते हैं, वैसे ही वह सब परमात्मा में स्थित हो जाता है॥७॥

---

कथं महिमानमनुभवतीत्युच्यते। यन्मित्रं पुत्रादि वा पूर्वं दृष्टं तद्वासनावासितः पुत्रमित्रादिवासनासमुद्भूतं पुत्रं मित्रमिव वाऽविद्यया पश्यतीत्येवं मन्यते, तथा श्रुतमर्थं तद्वासनयाऽनुश्रृणोतीव, देशदिगन्तरैश्च देशान्तरैर्दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनस्तत्प्रत्यनुभवतीवाविद्यया, तथा दृष्टं चास्मिञ्जन्मन्यदृष्टं च जन्मान्तरदृष्टमित्यर्थः। अत्यन्तादृष्टे वासनानुपपत्तेः। एवं श्रुतं चाश्रुतं चानुभूतं चास्मिञ्जन्मनि केवलेन मनसाऽननुभूतं च मनसैव जन्मान्तरेऽनुभूतमित्यर्थः। सच्च परमार्थोदकादि। असच्च मरीच्युदकादि। किं बहुनोक्तानुक्तं सर्वं पश्यति सर्वः पश्यति सर्वमनोवासनोपाधिः सन्नेवं सर्वकरणात्मा मनोदेवः स्वप्नान्पश्यति॥५॥

स यदा मनोरूपो देवो यस्मिन्काले सौरेण पित्ताख्येन तेजसा नाडीशयेन सर्वतोऽभिभूतो भवति तिरस्कृतवासनाद्वारो भवति तदा सह करणैर्मनसो रश्मयो हृद्युपसंहृता भवन्ति। यदा मनो दार्वग्निवदविशेषविज्ञानरूपेण कृत्स्नं शरीरं व्याप्यावतिष्ठते तदा सुषुप्तो भवति। अत्रैतस्मिन्काल एष मनआख्यो देवः स्वप्नान्न दर्शनद्वारस्य निरुद्धत्वात्तेजसा। अथ तदैतस्मिञ्शरीरे एतत्सुखं भवति यद्विज्ञानं निराबाधमविशेषेण शरीरव्यापकं प्रसन्नं भवतीत्यर्थः॥६॥

एतस्मिन्कालेऽविद्याकामकर्मनिबन्धनानि कार्यकरणानि शान्तानि भवन्ति। तेषु शान्तेष्वात्मस्वरूपमुपाधिभिरन्यथा विभाव्यमानमद्वयमेकं शिवं शान्तं भवतीत्येतामेवावस्थां पृथिव्याद्यविद्याकृतमात्रानुप्रवेशेन दर्शयितुं दृष्टान्तमाह —

पृथिवी च पृथिवीमात्रा चाऽऽपश्चाऽऽपोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाऽऽकाशश्चाऽऽकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोतं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं हस्तौ चादातव्यं चोपस्थश्चा-नन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहंकर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च॥८॥

शब्दादि पाँच गुणों से युक्त पृथिवी और उसकी गंधतन्मात्रा, जल और रसतन्मात्रा, तेज और रूपतन्मात्रा, वायु और स्पर्शतन्मात्रा, आकाश और शब्दतन्मात्रा, नेत्र और द्रष्टव्य रूप विषय, श्रोत्र और उसका श्रोतव्य विषय शब्द घ्राण और घ्रातव्य विषय गन्ध त्वगिन्द्रिय और स्पर्श योग्य पदार्थ, हाथ और ग्रहण तद्ग्राह्य वस्तु, उपस्थ और आनन्दयितव्य वस्तु, पायु और विसर्ग जनित मल, पाद और गन्तव्य स्थान, मन और मनन योग्य वस्तु, बुद्धि और बोधयितव्य पदार्थ, अहंकार और अहंकार रूप विषय, चित्त और चेतनीय पदार्थ, तेज और प्रकाश्य पदार्थ, ( प्रकाशक और प्रकाश के योग्य वस्तु ) प्राण और उसके धारण करने योग्य वस्तु ( ये सभी आत्मा में विलीन हो जाते हैं )॥८॥

---

स दृष्टान्तो यथा येन प्रकारेण सोम्य प्रियदर्शन! वयांसि पक्षिणो वासार्थं वृक्षं वासोवृक्षं प्रति संप्रतिष्ठन्ते गच्छन्ति। एवं यथा दृष्टान्तो ह वै तद्वक्ष्यमाणं सर्वं परे आत्मन्यक्षरे संप्रतिष्ठते॥७॥

किं तत्सर्वम्—

पृथिवी च स्थूला पञ्चगुणा तत्कारणा च पृथिवी मात्रा च गन्धतन्मात्रा, तथाऽऽपश्चाऽऽपोमात्रा च। तेजश्च तेजोमात्रा च। वायुश्च वायुमात्रा च। आकाशश्चाऽऽ-काशमात्रा च। स्थूलानि च सूक्ष्माणि च भूतानीत्यर्थः। तथा चक्षुश्चेन्द्रियं रूपं च द्रष्टव्यं

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता
मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः।
स परेऽक्षर आत्मनि संप्रतिष्ठते॥९॥

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायम- अज्ञान रहित

यही देखने वाला, स्पर्श करने वाला, सुनने वाला, सूँघने वाला, चखने वाला, मनन करने वाला, जानने वाला और कर्त्ता विज्ञानात्मा पुरुष है। वह ( सुषुप्ति के समय जगत् के आधारभूत ) पर अक्षर आत्मा में सम्यक्‌रूप से स्थित हो जाता है॥९॥

हे सोम्य! ( सम्पूर्ण एषणाओं से छूटा हुआ अधिकारी पुरुष ) इस तमोहीन, लोहितादि सम्पूर्ण गुणों से रहित, शुभ्र अक्षर को जो जानता है, वह सर्वज्ञ हो जाता है और सर्वरूप हो

---

च। श्रोत्रं च श्रोतव्यं च। घ्राणं च घ्रातव्यं च। रसश्च रसयितव्यं च। त्वक्च स्पर्शयितव्यं च। वाक्च वक्तव्यं च। हस्तौ चाऽऽदातव्यं च। उपस्थश्चाऽऽनन्दयितव्यं च। पायुश्च विसर्जयितव्यं च। पादौ च गन्तव्यं च। बुद्धीन्द्रियाणि कर्मेन्द्रियाणि तदर्थाश्चोक्ताः*। मनश्च पूर्वोक्तम्। मन्तव्यं च तद्विषयः। बुद्धिश्च निश्चयात्मिका। बोद्धव्यं च तद्विषयः। अहंकारश्चाभिमानलक्षणमन्तःकरणमहंकर्तव्यं च तद्विषयः। चित्तं च चेतनावदन्तःकरणम्। चेतयितव्यं च तद्विषयः। तेजश्च त्वगिन्द्रियव्यतिरेकेण प्रकाशविशिष्टा या त्वक्तया निर्भास्यो विषयो विद्योतयितव्यम्। प्राणश्च सूत्रं यदाचक्षते तेन विधारयितव्यं संग्रथनीयं सर्वं हि कार्यकरणजातं पारार्थ्येन संहतं नामरूपात्मकमेतावदेव॥८॥

अतः परं यदात्मरूपं जलसूर्यकादिवद्भोक्तृत्वेनेहानुप्रविष्टम् —

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा विज्ञानं विज्ञायतेऽनेनेति करणभूतं बुद्ध्यादीदं तु विजानातीति विज्ञानं कर्तृकारकरूपं तदात्मा तत्स्वभावो विज्ञातृस्वभाव इत्यर्थः। पुरुषः कार्यकरणसंघातोक्तोपाधिपूर्णत्वात्पुरुषः। स च जलसूर्यकादिप्रतिबिम्बस्य सूर्यादिप्रवेशवज्जलाद्याधारशेषे परेऽक्षर आत्मनि संप्रतिष्ठते॥९॥ शो

तदेकत्वविदः फलमाह —

परमेवाक्षरं वक्ष्यमाणविशेषणं प्रतिपद्यत इत्येतदुच्यते। स यो ह वै तत्सर्वैषणा- अज्ञान विनिर्मुक्तोऽच्छायं तमोवर्जितम्। अशरीरं नामरूपसर्वोपाधिशरीरवर्जितम्। अलोहितं लोहितादिसर्वगुणवर्जितम्। यत एवमतः शुभ्रं शुद्धं सर्वविशेषणरहितत्वात्। अक्षरं सत्यं

* 'तथा चोक्तानीति' पाठभेदः

**शरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य।**
**स सर्वज्ञः सर्वो भवति। तदेष श्लोकः ॥१०॥**

**विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि**
**संप्रतिष्ठन्ति यत्र। तदक्षरं वेदयते यस्तु सोम्य**
**स सर्वज्ञः सर्वमेवाऽऽविवेशेति॥११॥**

**इत्यथर्ववेदीयप्रश्नोपनिषदि चतुर्थः प्रश्नः ॥४॥**

जाता है, अर्थात् सर्वाधिष्ठान चैतन्य ब्रह्म स्वरूप हो जाता है। इस विषय में यह श्लोक (मन्त्र) है॥१०॥

हे सोम्य! जिस अक्षर में अग्नि आदि समस्त देवों के सहित विज्ञानात्मा प्राण और पृथिव्यादि भूत सम्यक् प्रकार से प्रतिष्ठित होते हैं, उसे जो जानता है, वह सर्वज्ञ पुरुष सभी में प्रविष्ट हो जाता है॥११॥

---

पुरुषाख्यम्। अप्राणममनोगोचरं शिवं शान्त सबाह्याभ्यन्तरमजं वेदयते विजानाति। यस्तु सर्वत्यागी सोम्य स सर्वज्ञो न तेनाविदितं किंचित्संभवति। पूर्वमविद्ययाऽसर्वज्ञ आसीत्पुनर्विद्ययाऽविद्यापनये सर्वो भवति, तत्तस्मिन्नर्थे एष श्लोको मन्त्रो भवति उक्तार्थसंग्राहकः ॥१०॥

विज्ञानात्मा सह देवैश्चाग्न्यादिभिः प्राणाश्चक्षुरादयो भूतानि पृथिव्यादीनि संप्रतिष्ठन्ति प्रविशन्ति यत्र यस्मिन्नक्षरे, तदक्षरं वेदयते यस्तु सोम्य प्रियदर्शन स सर्वज्ञः सर्वमेवाऽऽविवेशाऽऽविशतीत्यर्थः ॥११॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छंकरभगवतः कृतौ प्रश्नोपनिषद्भाष्ये चतुर्थः प्रश्नः ॥४॥

## अथ पञ्चमः प्रश्नः।

अथ हैनं शैब्यः सत्यकामः पप्रच्छ।

स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमों-
कारमभिध्यायीत। कतमं वाव स तेन
लोकं जयतीति तस्मै स होवाच॥१॥

एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः।
तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति ॥२॥

तदनन्तर इन पिप्पलाद मुनि से शिबि के पुत्र सत्यकाम ने पूछा—हे भगवन्! मनुष्यों में जो ( कोई विरला ) पुरुष मरणपर्यन्त ओंकार का चिन्तन करे, वह किस लोक को जीतता है?॥१॥

उस सत्यकाम से पिप्पलाद ने कहा— हे सत्यकाम! यह जो ओंकार है, वह निश्चय पर ( सत्य अक्षर ) ब्रह्म अथवा हिरण्यगर्भ रूप अपर ब्रह्म है। अतः विद्वान् उपासक ( ओंकार में ब्रह्मचिन्तन रूप ) इसी उपाय से पर और अपर ब्रह्म में से किसी एक को प्राप्त कर लेता है॥२॥

---

॥ अथ श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम्॥

अथ हैनं शैब्यः सत्यकामः पप्रच्छ।

अथेदानीं परापरब्रह्मप्राप्तिसाधनत्वेनोंकारस्योपासनविधित्सया प्रश्न आरभ्यते—

स यः कश्चिद्ध वै भगवन्मनुष्येषु मनुष्याणां मध्ये तदद्भुतमिव प्रायणान्तं मरणान्तं यावज्जीवमित्येतदोंकारमभिध्यायीताऽऽभिमुख्येन चिन्तयेत्। बाह्यविषयेभ्य उपसंहृतकरणः समाहितचित्तो भक्त्यावेशितब्रह्मभावे ओंकारे। आत्मप्रत्ययसंतानाविच्छेदो भिन्नजातीयप्रत्ययान्तराखिलीकृतो निर्वातस्थदीपशिखासमोऽभिध्यानशब्दार्थः। सत्यब्रह्मचर्याहिंसापरिग्रहत्यागसंन्यासशौचसंतोषामायावित्वाद्यनेकयमनियमानुगृहीतः स एवं यावज्जीवव्रतधारणः। कतमं वावानेके हि ज्ञानकर्मभिर्जेतव्या लोकास्तिष्ठन्ति तेषु तेनोंकाराभिध्यानेन कतमं स लोकं जयतीति पृष्टवते तस्मै स होवाच पिप्पलादः॥१॥

एतद्वै सत्यकाम। एतद्ब्रह्म वै परं चापरं च ब्रह्म परं सत्यमक्षरं पुरुषाख्यमपरं च प्राणाख्यं प्रथमजं यत्तदोंकार एवोंकारात्मकमोंकारप्रतीकत्वात्। परं हि ब्रह्म शब्दा-

**स सद्येकमात्रमभिध्यायीत स तेनैव संवेदित-स्तूर्णमेव जगत्यामभिसंपद्यते। तमृचो मनुष्य-लोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति॥३॥**

यदि वह एक मात्रा-विशिष्ट ओंकार का चिन्तन करता है, तो उससे बोध प्राप्त कर शीघ्र ही पृथिवी लोक में प्राप्त हो जाता है। उसे ऋचाएँ मनुष्यलोक को ले जाती हैं। वहाँ पर वह तप, ब्रह्मचर्य और श्रद्धा से सम्पन्न होकर अपनी महिमा का अनुभव करता है॥३॥

---

द्युपलक्षणानर्हं सर्वधर्मविशेषवर्जितमतो न शक्यमतीन्द्रियगोचरत्वात्केवलेन मनसाऽवगाहितुमोंकारे तु विष्ण्वादिप्रतिमास्थानीये भक्त्यावेशितब्रह्मभावे ध्यायिनां तत्प्रसीदतीत्यवगम्यते शास्त्रप्रामाण्यात्तथाऽपरं च ब्रह्म। तस्मात्परं चापरं च ब्रह्म यदोंकारः इत्युपचर्यते। तस्मादेवं विद्वानेतेनैवाऽऽत्मप्राप्तिसाधनेनैवोंकाराभिध्यानेनैकतरं परमपरं वाऽन्वेति ब्रह्मानुगच्छति नेदिष्ठं ह्यालम्बनमोंकारो ब्रह्मणः॥२॥

स यद्यप्योंकारस्य सकलमात्राविभागज्ञो न भवति तथाऽप्योंकाराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छति एतदेकदेशज्ञानवैगुण्यतयोंकारशरणः कर्मज्ञानोभयभ्रष्टो न दुर्गतिं गच्छति किं तर्हि यद्यप्येवमोंकारमेवैकमात्राविभागज्ञः एव केवलोऽभिध्यायीतैकमात्रं सदा ध्यायीत स तेनैवैकमात्राविशिष्टोंकाराभिध्यानेनैव संवेदितः संबोधितस्तूर्णं क्षिप्रमेव जगत्यां पृथिव्यामभिसंपद्यते। किं, मनुष्यलोकम्। अनेकानि हि जन्मानि जगत्यां संभवन्ति तत्र तं साधकं जगत्यां मनुष्यलोकमेवर्चः उपनयन्त उपनिगमयन्ति ऋचः। ऋग्वेदरूपा ह्योंकारस्य प्रथमैकमात्राऽभिध्याता तेन। स तत्र मनुष्यजन्मनि द्विजाग्र्यः संस्तपसा ब्रह्मचर्येण श्रद्धया च संपन्नो महिमानं विभूतिमनुभवति न वीतश्रद्धो यथेष्टचेष्टो भवति, योगभ्रष्टः कदाचिदपि न दुर्गतिं गच्छति॥३॥

**अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम्। स सोमलोके विभूति-मनुभूय पुनरावर्तते॥४॥**

**यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुष-मभिध्यायीत स तेजसि सूर्ये संपन्नः। यथा पादोदर-स्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघना-त्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः॥५॥**

यदि वह (अ, उ, इन) दो मात्राओं से विशिष्ट ओंकार का चिन्तन करता है, तो उस चिन्तन द्वारा मन के साथ एकत्व को प्राप्त करता है, उस समय यजुर्वेद की श्रुतियों द्वारा वह अन्तरिक्ष में स्थित सोमलोक को ले जाया जाता है अर्थात् उक्त श्रुतियाँ सोमलोक संबन्धी जन्म प्राप्त करा देती हैं। तत्पश्चात् सोमलोक में विभूति का अनुभव कर वह पुरुष फिर मनुष्यलोक में लौट आता है॥४॥

परन्तु जो पुरुष त्रिमात्रा विशिष्ट 'ॐ' इस अक्षरात्मक प्रतीक रूप से परम पुरुष की उपासना करता है वह (तृतीय मात्रा रूप होकर) तेजोमय सूर्य लोक में स्थित हो जाता है। जैसे सर्प केंचुली से छूट जाता है, वैसे ही वह उपासक निश्चय ही सम्पूर्ण पाप से मुक्त हो जाता है, फिर तो वह साम श्रुतियों के द्वारा ऊपर की ओर ब्रह्मलोक में ले जाया जाता है। इस जीवन से उत्कृष्ट हृदय में स्थित परम पुरुष का दर्शन करता है, इसी विषय में ये दो श्लोक हैं॥५॥

---

अथ पुनर्यदि द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोंकारमभिध्यायीत स्वप्नात्मके मनसि मननीये यजुर्मये सोमदैवत्ये संपद्यत एकाग्रतयाऽऽत्मभावं गच्छति। स एवं संपन्नो मृतोऽन्तरिक्षमन्तरिक्षाधारं द्वितीयमात्रारूपं द्वितीयमात्रारूपैरेव यजुर्भिरुन्नीयते सोमलोकं सौम्यं जन्म प्रापयन्ति तं यजूंषीत्यर्थः। स तत्र विभूतिमनुभूय सोमलोके मनुष्यलोकं प्रति पुनरावर्तते॥४॥

यः पुनरेतमोङ्कारं त्रिमात्रेण त्रिमात्राविषयविज्ञानविशिष्टेनोमित्येतेनैवाक्षरेण परं सूर्यान्तर्गतं पुरुषं प्रतीकेनाभिध्यायीत तेनाभिध्यानेन, प्रतीकत्वेन ह्यालम्बनत्वं प्रकृतमोंकारस्य परं चापरं च ब्रह्मेत्यभेदश्रुतेरोंकारमिति च द्वितीयाऽनेकशः श्रुता बाध्ये-

ऋग्वादि वेद तथा ओंकार से प्राप्त होने वाले लोक का वर्णन।

**तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः। क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः ॥६॥**

अकार, उकार और मकार— ये तीनों मात्राएँ भिन्न-भिन्न रहने पर मृत्यु से युक्त हैं। वे मात्राएँ ध्यान की क्रियाओं में प्रयुक्त होती हैं और व परस्पर संबद्ध हैं तथा (विपरीत प्रयोग न किये जाने के कारण ये) अनविप्रयुक्त हैं। इस प्रकार बाह्य जाग्रत् रूप, आभ्यन्तर सुषुप्ति रूप और मध्यम स्वप्न रूप क्रियाओं में ओंकार की उक्त तीन मात्राओं का सम्यक् प्रयोग किये जाने पर विद्वान् पुरुष फिर अपने स्वरूप से विचलित नहीं होता॥६॥

---

तान्यथा। यद्यपि तृतीयाभिधानत्वेन करणत्वमुपपद्यते, तथाऽपि प्रकृतानुरोधात्त्रिमात्रं परं पुरुषमिति द्वितीयैव परिणेया "त्यजेदेकं कुलस्यार्थे" इति न्यायेन, स तृतीयमात्रारूपस्तेजसि सूर्ये संपन्नो भवति ध्यायमानो मृतोऽपि सूर्यात्सोमलोकादिव न पुनरावर्तते, किन्तु सूर्ये संपन्नमात्र एव। यथा पादोदरः सर्पस्त्वचा विनिर्मुच्यते जीर्णत्वग्विनिर्मुक्तः स पुनर्नवो भवति। एवं ह वा एष यथा दृष्टान्तः स पाप्मना सर्पत्वक्स्थानीयेनाशुद्धिरूपेण विनिर्मुक्तः सामभिस्तृतीयमात्रारूपैरूर्ध्वमुन्नीयते ब्रह्मलोकं हिरण्यगर्भस्य ब्रह्मणो लोकं सत्याख्यम्। स हिरण्यगर्भः सर्वेषां संसारिणां जीवानामात्मभूतः। स ह्यन्तरात्मा लिङ्गरूपेण सर्वभूतानां, तस्मिन्हि लिङ्गात्मनि संहताः सर्वे जीवाः। तस्मात्स जीवघनः। स विद्वांस्त्रिमात्रोंकाराभिज्ञ एतस्माज्जीवघनाद्धिरण्यगर्भात्परात्परं परमात्माख्यं पुरुषमीक्षते पुरिशयं सर्वशरीरानुप्रविष्टं पश्यति ध्यायमानः। तदेतस्मिन्यथोक्तार्थप्रकाशकौ मन्त्रौ भवतः ॥५॥

तिस्रस्त्रिसंख्याका अकारोकारमकाराख्या ओंकारस्य मात्राः। मृत्युमत्यः, मृत्युर्यासां विद्यते ता मृत्युमत्यो मृत्युगोचरादनतिक्रान्ता मृत्युगोचरा एवेत्यर्थः। ता आत्मनो ध्यानक्रियासु प्रयुक्ताः। किंचान्योन्यसक्ता इतरेतरसंबद्धाः। अनविप्रयुक्ता विशेषेणैकैकविषये एव प्रयुक्ता विप्रयुक्ताः न तथा विप्रयुक्ता अविप्रयुक्ता नाविप्रयुक्ता अनविप्रयुक्ताः। किं तर्हि विशेषेणैकैकस्मिन्ध्यानकाले तिसृषु क्रियासु बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तस्थानपुरुषाभिध्यानलक्षणासु योगक्रियासु सम्यक्प्रयुक्तासु सम्यग्ध्यानकाले प्रयोजितासु न कम्पते न चलति ज्ञो योगी यथोक्तविभागज्ञ ओंकारस्येत्यर्थः। न तस्यैवंविदश्चलनमुपपद्यते। यस्-

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे सकलं त्यजेत् ॥ नीति श्लोक. हितोपदेश

ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते। तमोंकारेणैवाऽऽयतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं चेति॥७॥

इत्यथर्ववेदीयप्रश्नोपनिषदि पञ्चमः प्रश्नः ॥५॥

साधक ऋग्वेद द्वारा इस मनुष्य उपलक्षित लोक को यजुर्वेद द्वारा सोम से अधिष्ठित अन्तरिक्ष लोक को और सामवेद द्वारा उस तृतीय ब्रह्मलोक को प्राप्त होता है जिसे विद्वान् लोग ही जानते हैं तथा ओंकार रूप आलम्बन के द्वारा ही विद्वान् उस लोक को प्राप्त होता है। जो स्थूल सूक्ष्म प्रपंच से रहित, अजर, अमर, अभय, एवं सबसे परे है। मन्त्र में इति शब्द प्रश्न समाप्ति का द्योतक है॥७॥

॥ इति पञ्चमः प्रश्नः ॥

---

माञ्जाग्रत्स्वप्नसुषुप्तपुरुषाः सह स्थानैर्मात्रात्रयरूपेणोंकारात्मरूपेण दृष्टाः (स) ह्येवं विद्वान्सर्वात्मभूत ओंकारमयः कुतो वा चलेत्कस्मिन्वा॥६॥

सर्वार्थसंग्रहार्थो द्वितीयो मन्त्रः—

ऋग्भिरेतं लोकं मनुष्योपलक्षितम्। यजुर्भिरन्तरिक्षं सोमाधिष्ठितम्। सामभिर्यत्तद्ब्रह्मलोकमिति तृतीयं कवयो मेधाविनो विद्यावन्तः एव,नाविद्वांसो वेदयन्ते। तं त्रिविधं लोकमोंकारेण साधनेनापरब्रह्मलक्षणमन्वेत्यनुगच्छति विद्वान्। तेनैवोंकारेण यत्तत्परं ब्रह्माक्षरं सत्यं पुरुषाख्यं शान्तं विमुक्तं जाग्रत्स्वप्नसुषुप्त्यादिविशेषसर्वप्रपञ्चविवर्जितमतः एवाजरं जरावर्जितममृतं मृत्युवर्जितमतः एव यस्माज्जराविक्रियादिरहितमतोऽभयम्। यस्मादेवाभयं तस्मात्परं निरतिशयम्। तदप्योंकारेणाऽऽयतनेन गमनसाधनेनान्वेतीत्यर्थः। इतिशब्दो वाक्यपरिसमाप्त्यर्थः॥७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ प्रश्नोपनिषद्भाष्ये पञ्चमः प्रश्नः ॥५॥

शौर्य से राम जी ने लंका जीता
सौन्दर्य से " " जनक पुरी जीता
शील से " " अयोध्या जीता

16 कृष्ण. चन्द्रमा का 16 कला
चन्द्र वंशी.
12 कला वाला राम.
सूर्य वंश. 12 राशी में चलता है

सोलह कला वाला पुरुष कौन है?

## अथ षष्ठः प्रश्नः।

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ। भगवन्हिरण्य-
नाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत।
षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं
नाहमिमं वेद यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति
समूलो वा एष परिशुष्यति योऽनृतमभिवदति, तस्मा-
न्नार्हाम्यनृतं वक्तुं, स तूष्णीं रथमारुह्य प्रवव्राज।
तं त्वा पृच्छामि क्वासौ पुरुष इति॥ १॥

(+) नहिं असत्य सम पातक पुञ्जा गिरि सम होंहिं कि कोटिक गुञ्जा.

उसके बाद उन पिप्पलाद मुनि से भारद्वाज के पुत्र सुकेशा ने पूछा— हे भगवन्! कौशल देश के राजकुमार हिरण्यनाभ ने मेरे पास आकर इस प्रश्न को पूछा था कि हे भारद्वाज! तुम सोलह कला वाले पुरुष को जानते हो? मैंने उस राजकुमार से कहा— मैं इसे नहीं जानता हूँ। यदि मैं इसे जानता होता तो भला सर्वगुण सम्पन्न तुझ शिष्य को क्यों नहीं बतलाता। जो पुरुष मिथ्या भाषण करता है, वह मूल के सहित सर्वथा सूख जाता है। अतः मैं तुझसे छिपाने के लिए मिथ्या भाषण नहीं कर रहा हूँ। इतना सुनने पर वह राजकुमार चुपचाप रथ में बैठ कर चला गया। (तब से मेरे हृदय में वह ज्ञातव्य रूप से काँटे के समान खटक रहा है) अतः अब मैं उसके विषय में आपसे पूछता हूँ कि वह जानने योग्य षोडशकला पुरुष कहाँ रहता है?॥१॥

---

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ, समस्तं जगत्कार्यकारणलक्षणं सह विज्ञानात्मना परस्मिन्नक्षरे सुषुप्तिकाले संप्रतिष्ठि-(ष्ठ)-तं इत्युक्तम्। सामर्थ्यात्प्रलयेऽपि तस्मिन्नेवाक्षरे (स्थित) संप्रतिष्ठते जगत्तत एवोत्पद्यत इति सिद्धं भवति। न ह्यकारणे कार्यस्य संप्रतिष्ठानमुपपद्यते। उक्तं च— "आत्मन एष प्राणो जायते" इति। जगतश्च यन्मूलं तत्परिज्ञानात्परं श्रेय इति (ज्ञान श्रेष्ठ) सर्वोपनिषदां निश्चितोऽर्थः। अनन्तरं चोक्तं स सर्वज्ञः सर्वो भवतीति। वक्तव्यं च क्व तर्हि तदक्षरं सत्यं पुरुषाख्यं विज्ञेयमिति। तदर्थोऽयं प्रश्न आरभ्यते। वृत्तान्वाख्यानं च विज्ञानस्य दुर्लभत्वख्यापनेन तल्लब्ध्यर्थं मुमुक्षूणां यत्नविशेषोत्पादनार्थम्।

हे भगवन्हिरण्यनाभो नामतः कोसलायां भवः कौसल्यो राजपुत्रो जातितः क्षत्रियो मामुपेत्योपगम्यैतमुच्यमानं प्रश्नमपृच्छत। षोडशकलं षोडशसंख्याकाः कला अवयवा

